खलु मीयन्ते लोकोऽसौ" इति "स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति" तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति" [बृ० १।५।२३] इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥ २१ ॥

नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान्बादरायण आचार्यः पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ (७)

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरं मदीयं सरो यस्मिन्न-

---

स्योपास्यदेवतया भोगमात्रसाम्ये श्रुत्यन्तरमाह। स यथेति। सशब्दो दृष्टान्तपरः। अवन्ति भजन्ते। तत्रैव वाक्यान्तरमाह। तेनेति। उशब्दोऽप्यर्थः सलोकतामपीति संबध्यते। प्रकृतेनोपासनेनोपास्याया देवतायाः सायुज्यं तेन समानदेहतां समानलोकतां च भावनाविशेषादाप्नोतीत्यर्थः ॥ २१ ॥

विदुषां निरङ्कुशैश्वर्याभावे दोषमाशङ्कते। नन्विति। सह परमेश्वरस्यैश्वर्येणातिशयेन वर्तत इति सातिशयं विदुषामैश्वर्यं तथा च परमेश्वराधीनत्वाल्लौकिकैश्वर्यवत्कार्यं कार्यत्वाच्चान्तवदित्यर्थः। विद्वदैश्वर्यस्यान्तवत्त्वे का क्षतिरित्याशङ्क्य विदुषां मुक्तता न स्यादित्याह। ततश्चेति। एतदुत्तरत्वेनोत्तरसूत्रं सूत्रकारं पूजयन्नवतारयति। अत इति। भगवानित्यनेन सर्वज्ञत्वादिसंपत्तिरुक्ता। आचार्यशब्देन शास्त्रार्थबहुलीकरणं सदाचारे शिष्याणां स्थापनं स्वयं तदाचरणं चेत्यत्र नैपुण्यमुक्तमिति भेदः। यत्तु सातिशयत्वेन कार्यत्वं ततश्चान्तवत्त्वमित्यनुमानं तत्र किमैश्वर्यस्यान्तवत्त्वमात्रं साध्यं किंवा मुक्त्यभावो विदुषामिति विकल्प्याऽऽद्ये सिद्धसाध्यत्वं मत्वा द्वितीये क्रममुक्तिवादिश्रुतिविरोधमाह। अनावृत्तिरिति। सूत्रस्थं प्रतिज्ञापदं व्याचष्टे। नाडीति। अर्चिरादिपदोक्तदेवयानं पन्थानं स्मारयितुं विशेषणद्वयम्। ये ब्रह्मलोकं गच्छन्ति ते तं प्राप्य भुक्तभोगास्ततो नाऽऽवर्तन्त इति संबन्धः। कानि तानि शास्त्रोक्तानि विशेषणानीत्युक्ते यथाशास्त्रं तान्यनुक्रामति। यस्मिन्निति। इतो लोकात्पृथिवीशब्दिताततृतीयस्यां दिवि यो ब्रह्मलोकस्तस्मिन्नरण्यसंज्ञौ द्वावर्णवावित्यर्थः। तस्मिन्नेवान्नमयं हर्षकरं च सरोऽस्तीत्याह। यस्मिन्नैरमिति। सोमसवन इत्यत्र सोमशब्दोऽमृतव-

---

१ ज. 'श्च ण्य'। २ ठ. ड. 'ज्यं स'। ३ क. ड. 'त्कार्यता'। ४ ठ. ड. 'पुण्मु'। ५ क. ड. 'वित्यादिश्रु'।

श्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिवै भुक्तभोगा आवर्तन्ते। कुतः। "तयोर्ध्वमायन्नमृतत्वमेति" [छा० ८। ६। ६। कठ० ६। १६] "तेषां न पुनरावृत्तिः" [बृ० ६। २। १५] "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते" [छा० ४। १५। ५] "ब्रह्मलोकमभिसंपद्यन्ते" [छा० ८। १५। १] "न च पुनरावर्तते" [छा० ८। १५। १। वासुदेवोप० ४] इत्यादिशब्देभ्यः। अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम् "कार्यात्यये तदध्यक्षेण सहातः परम्" [ब्र० सू० ४। ३। १४] इत्यत्र। सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः। तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति। अनावृत्तिः शब्दादनावृत्तिः

---

चनः। कर्मज्ञानशून्यानां दुष्प्रापत्वमपराजितत्वम्। ब्रह्मणो हिरण्यगर्भस्येति यावत्। प्रभुशब्दोऽपि हिरण्यगर्भमेवाधिकरोति। उक्तविशेषणवति ब्रह्मलोके मानमाह। यश्चेति। चन्द्रलोकादिवेति वैधर्म्योदाहरणम्। प्रतिज्ञामेवं व्याख्यायं मोक्षहेतुमाकाङ्क्षापूर्वकं व्याख्याति। कुत इत्यादिना। ननु दर्शितानामनावृत्तिश्रुतीनामर्थवादत्वाददविरोधेऽप्रामाण्यमिति नानुमानापबाधने सामर्थ्यमिमामिहेति च विशेषणात्कल्पान्तरे भवत्यावृत्तिरिति तत्राऽऽह। अन्तवत्त्वेऽपीति। ये तावदूर्ध्वरेतसः स्वाश्रमधर्ममात्रनिष्ठा ब्रह्मचर्येण ब्रह्मलोकमधिरूढास्तेषामन्तरेण विद्यां बन्धध्वंसासिद्धेरस्त्येवाऽऽवृत्तिः। ये तु सगुणोपासकास्तेषामैश्वर्यस्य कल्पमात्रस्थायित्वेऽपि क्रममुक्तिविवक्षयाऽनावृत्तिरविरुद्धेत्यर्थः। सगुणब्रह्मविदामेवानावृत्तिरत्र प्रतिपाद्यते न निर्गुणब्रह्मविदां तत्र को हेतुरित्याशङ्क्य तेषामावृत्तिशङ्काभावादित्याह। सम्यगिति। सगुणब्रह्मविदामपि ब्रह्मलोकगतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेवै मुक्तिरिति स्थिते सम्यग्दर्शिनामनावृत्तिः सुतरां सिध्यतीति कैमुतिकन्यायमाह। तदाश्रयणेनेति। उपासकानामीश्वरायत्तमैश्वर्यं न निरतिशयमित्यधिकरणार्थमुपसंहर्तुमितीत्युक्तम्। सूत्राभ्यासस्य प्रयोजनमाह। अनावृत्तिः शब्दादिति। यत्राध्यायपरिसमाप्तिरेव तत्र पदस्यैवाभ्यासो दृष्टः प्रकृते सूत्रस्यैवाभ्यासाच्चतुर्लक्षणस्य वेदान्तमीमांसाशास्त्रस्य समन्वयाविरोधसाधनफ-

---

१ क. ञ. 'ता पुरी ब्रह्म'। २ क. ञ. 'ते तं ते प्रा'। ३ ञ. ट. 'वद्भुक्त'। ञ. 'वद्भुक्त'। ४ ञ. ट. 'यते" "न। ५ ज. ट. स। ६ ट. इतिश्रु'। ७ ज. 'णपरायणा'। ८ ज. ट 'ब्दादि'। ९ क. 'प्राप्यत्व'। १० क.ञ.ठ.ड.'य हे'। ११ क.ञ.'दवि'। १२ ठ.'विशेषेऽप्रा'। १३ठ.ड.'लोकं ग'।

शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥ (७)

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

लानां साकल्येनोक्तत्वाद्वक्तव्यानवशेषात्परिसमापनमुचितमिति भावः ॥ २२ ॥ (७)

व्याख्याऽसंख्यातवर्कक्रकचचयरयत्रस्तदुस्तर्कशङ्का
शङ्काव्याजप्रकारप्रसरणसमतावस्तुतत्त्वं श्रयन्ती ॥
शुद्धानन्दाङ्घ्रियुग्मस्मृतिभरनिभृतप्रौढगाढोक्तिरूढाऽऽ-
नन्दज्ञानप्रणीता जगति मुदमियं सद्धियां संविधत्ताम् ॥ १ ॥
सन्त्येव बहुलानीह व्याख्यानानि महाधियाम् ॥
व्याख्या तथाऽपि सौख्येन व्याख्यानाय मया कृता ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृते श्रीमच्छारीरकमीमांसाभाष्यविभागे न्यायनिर्णये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

॥ समाप्तमिदं ब्रह्ममीमांसाशास्त्रं सटीकशांकरभाष्ययुतम् ॥

॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥



१ भ. दर्शयति ।

# श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राणां वर्णानुक्रमपत्रकम् ।

## आ.

## इ.



## ई.

## द.

## पः

## श.

स